# Srimad Appayya Dikshitendra Granthavali

Series-3

# Collection of Stotras

By

SRIMAD APPAYYA DIKSHITENDRA

WITH OWN

COMMENTARIES

*Edited By* :

PANDIT SRI A. RAMAKRISHNA DIKSHITHAR

and

PANDIT SRI K. RAMACHANDRA SARMA

SRIMAD APPAYYA DIKSHITENDRA GRANTHAVA

PRAKASANA—SAMITI (Regd.)

SECUNDERABAD—26 (A.P.)

शिवाभ्यां नमः

श्रीमदप्पय्यदीक्षितेन्द्रकृता

# श्रीदुर्गाचन्द्रकलास्तुतिः

स्वोपज्ञया विवृत्त्या संवलिता



**वेधो हरीश्वरस्तुत्यां विहर्त्रीं विन्ध्यभूधरे ।**
**हरप्राणेश्वरीं वन्दे हन्त्रीं विबुधविद्विषाम् ॥ १ ॥**[1]

श्रीदेवीमाहात्म्यवराहपुराणहरिवंशभागवतादिप्रतिपन्नदेवीमहिमसंजिघृक्षया इदं स्तोत्रमारिप्सितम् । तत्र–

" सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तराद् गदतो मम ॥ "

इति **देवीमाहात्म्यस्य** प्रथमश्लोके **भुवनेश्वरीमन्त्रमुद्धार्यं** विवक्षितं व्याचक्षते । तद्यथा—यो यकारस्य अष्टमो हकारः, तस्य विशेषणं सूर्यतनयः अग्निः, तेजस्वित्वेन तन्त्रेदिष्ठत्वात्, तेन तद्बीजं रेफः लभ्यते ; तद्वत्वं हकारस्य पुनः लक्षणयोच्यते । सवर्णा लोहितशुक्लकृष्णवर्णसहिता प्रकृतिः, तस्यापत्यवत् तत्संबन्धी तद्वाचक ईकारः, इहापि तद्वत्वं लक्षणयोच्यते । एवं रेफेण ईकारेण च युक्तः हकारात्मको मनुः मन्त्रः, तत्प्रतिपाद्यदेवता कथ्यते । तस्याः मन्त्रतत्प्रतिपाद्यदेवताया उत्पत्तिं निशामयेति संबन्धः । मन्त्रस्याग्रिमो भागो बिन्दुस्तु श्लोके स्वरूपत एव निवेशित इति तां शैलीमनुसृत्य, अत्रापि श्लोके तस्य मन्त्रोद्धारः पादचतुष्टयेऽपि कार्यो विवक्षितः । अत्रानुलोम्येनैव हकारादीनाम् उच्चारः । वेधः कृता देवीस्तुतिः **देवीमाहात्म्ये** प्रसिद्धा । हरिकृता **हरिवंशे** । ईश्वरकृता **वराहपुराणे** ॥ १ ॥

इति प्रथमः श्लोकः (१)

---

**अभ्यर्थनेन सरसीरुहसंभवस्य**
**त्यक्त्वोदिता भगवदक्षिपिधानलीलाम् ।**
**विश्वेश्वरी विपदपागमने पुरस्ता-**
**न्माता ममास्तु मधुकैटभयोर्निहन्त्रीम् ॥ २ ॥**

अभ्यर्थनेनेति । अनेन श्लोकेन **देवीमाहात्म्यस्य** प्रथमाध्यायेन प्रतिपादितं मधुकैटभवधरूपं देव्याः प्रथमचरितं संगृहीतम् । भगवत्कृतेऽपि मधुकैटभवधे माणवककर्तृके आचार्येण कार्यमाणे अध्ययने कारीषाग्नेः

---

१. त्रिपुरविद्विषामित्यपि पाठो दृश्यते.

इव तत्सामर्थ्याचरणेन साक्षात् तत्प्रेरणेन च देव्याः प्रकर्तृत्वमस्तीति मधुकैटभयोः निहन्त्रीत्युक्तम्। देवी हरिं प्रति बोधं नीत्वा मधुकैटभयोः वधे सामर्थ्यं कृतवतीति तयोः वधे भावं चोत्पादितवतीति देवीमाहात्म्ये ब्रह्मस्तुतिगतात् वचनात् ज्ञायते—

"प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु।
बोधं च क्रियतामस्य हन्तुमेतौ महासुरौ॥"

इति। **अक्षिपिधानलीलामिति**; अनेन भगवतो योगनिद्रा, अन्येषां निद्रेव मोहपारवश्यापादिनी न भवति। किं तु लीलया सखीव लोचनपिधानमात्रं करोतीति दर्शितम्। तदुक्तं **हरिवंशे**—

"या ह्येषा गह्वरी माया निद्रेति जगति स्थिता।
सा कर्मान्वेषिणी घोरा कालरात्री महीपते॥

अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी।
जीवितार्धहरी घोरा सर्वप्राणभृतां भुवि॥

नैतया कश्चिदाविष्टो जृम्भमाणो मुहुर्मुहुः।
शक्तः प्रसहितुं वेगं मज्जन्निव महार्णवे॥

अन्नजा भुवि मर्त्यानां श्रमजा वा कथंचन।
नैशा भवति लोकस्य निद्रा सर्वस्य लौकिकी।
सुखान्ते क्षीयते ह्येषा प्रायशो भुवि देहिनाम्॥

मृत्युकालाभिभूतानां प्राणान् स्थापयते भृशम्।
देवेष्वपि दधारैनां नान्यो नारायणादृते॥

सखी सार्वरहस्येषा माया विष्णोः शरीरजा[1]।
सैषा नारायणमुखे दृसा[2] कमललोचना॥

लोकानल्पेन कालेन ग्रसते भृशमोहिनी[3]।

इति॥ २॥

इति द्वितीयः श्लोकः (२)

---

१. विष्णुशरीरजा P. २. दृष्टा P. ३. भूतमोहिनी P.

प्राङ्निर्जरेषु निहतैर्निजशक्तिलेशै-
रेकीभवद्भिरुदिताखिललोकगुप्त्यै ।
संपन्नशस्त्रनिकरा च तदायुधस्थै-
र्माता ममास्तु महिषान्तकरी पुरस्तात् ॥ ३ ॥

**प्राङ्निर्जरेष्विति ।** अनेन श्लोकेन द्वितीयादिभिस्त्रिभिरध्यायैः प्रतिपादितं देव्या **मध्यमचरितं** संगृहीतम् । अत्र यद्यपि द्वितीये ब्रह्मविष्णुशिवानामिन्द्रादीनां च शरीरात् निष्क्रान्तं तेजः सर्वं देवी विग्रह-रूपेणाभिव्यक्तमासीदित्येतावदेवोक्तम् । देव्याश्च शूलादीन्यायुधानि देवैः स्वस्वशूलेभ्यो विनिर्गमय्य दत्तानी-त्येवोक्तम् । तथाप्युत्तमचरितगतवचनान्तरपर्यालोचनया देव्याः शक्त्यंशा एव तत्तद्देवपालनीयैकदेशपालनशक्तित्वेन देव्या निवेशिताः ; त एव महिषासुरवधेन सर्वलोकसंरक्षणार्थं विहिताः । एवं तदायुधनिवेशितनिजशक्त्यंशा अपीति ज्ञायते । **तत्र** हि—

" ब्रह्मेशगुहविष्णूनां तथैवेन्द्रस्य शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपाश्चण्डिकां ययुः ॥

यस्य देवस्य यद्रूपं भूषणं वाहनं यथा ।
तद्वदेव हि तच्छक्तिरसुरान् योद्धुमाययौ ॥ "

इत्यादिना ब्रह्मादिशरीरनिर्गताभिः ब्राह्म्यादिशक्तिभिरपि युद्धमुपक्रम्य ;

" बलावलेपाद् दुष्टे त्वं मा दुर्गे गर्वमावह ।
अन्यासां बलमाश्रित्य [1]युध्यसे यातिमानिनि ॥ "

इति **सुम्भेनोक्ते,** देव्या वचनमाम्नायते ;

" एकैवाहं जगत्यत्र द्वितीया का ममापरा ।
पश्यतां दुष्ट मय्येव विशन्त्यो मद्विभूतयः ॥ " इति ।

" ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम् ।
तस्या देव्यास्तनौ जग्मुरेकैवासीत् तदाम्बिका ॥ "

इत्युक्त्वा, पुनर्देवीवचनमाम्नायते—

" अहं विभूत्या बहुभिरिह रूपैर्यदास्थिता ।
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव ॥ "

इति ॥ ३ ॥

इति तृतीयः श्लोकः (३)

प्रालेयशैलतनया तनुकान्तिसंपत्-
कोशोदिता कुवलयच्छविचारुदेहा ।
नारायणी नमदभीप्सितकल्पवल्ली
सुप्रीतिमावहतु सुम्भहनिसुम्भहन्त्री ॥ ४ ॥

प्रालेयति । अनेन श्लोकेन पञ्चमाध्यायप्रभृतिभिः षष्ठाध्यायैः प्रतिपादितस्य सभृत्यबान्धव-सुम्भनिसुम्भवधरूपस्य देव्या उत्तमचरितस्यार्थः संगृहीतः । देवीमहात्म्ये सुम्भनिसुम्भहन्त्री कौशिकी सिद्ध-वत्कृत्य वर्णिता ; विशिष्य तदाविर्भावो न वर्णितः । स तु शिवपुराणे वायुसंहितायां वर्णितः । तत्र हि—

"दैत्यौ सुम्भनिसुम्भाख्यौ भ्रातरौ तौ बभूवतुः ।
ताभ्यां तपोबलाद् दत्तं ब्रह्मणा परमेष्ठिना ॥

अवध्यत्वं जगत्यस्मिन् पुरुषैरखिलैरपि ।
अयोनिजा तु या कन्या स्त्र्यङ्गकोशसमुद्भवा ॥

[1]अजातपुंस्पर्शरतिरतिलङ्घ्यपराक्रमा ।
तया तु नौ वधः संख्ये तस्यां कामाभिभूतयोः ॥

इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति ।
ततः प्रभृति शक्रादीन् विजित्वा समरे सुरान् ॥

निस्वाध्यायवषट्कारं जगच्चक्रतुरक्रमात् ।
तयोर्लभाय देवेशं ब्रह्मा प्रार्थितवान् पुनः ॥

विनिन्द्यापि रहस्यम्बां क्रोधयित्वा यथा तथा ।
तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् ॥

निसुम्भसुम्भयोर्हन्त्रीं सुरेभ्यो दातुमर्हसि ।
इत्थमभ्यर्थितो धात्रा भगवान् नीललोहितः ॥

कालीत्याह रहस्यम्बां निन्दयन्निव सस्मितः ।"

इति प्रक्रम्य ;

"वाचा नाभिरता भर्तुरपि सर्वाङ्गसुन्दरी ।
मा वृथैवाभिजायेत सर्वैरपि गुणोत्तरैः ॥

---

१. अजातपुंस्पर्शरतिर्नातिलङ्घ्य° P.

भर्तृभोगैकशेषा हि सर्ग एवैष योषिताम् ।
तथा सत्यन्यथा भूता नारी कुत्रोपयुज्यते ॥"

इत्यादिदेवीवचनमुपन्यस्य, क्रीडार्थं कालीत्युक्तमिति देवेनोक्ते ;

"भूयसीय तव प्रीतिरगौरमिति मे वपुः ।
क्रीडोक्तीरपि कालीति घटते कथमन्यथा ॥"

इति पुनर्वचनमुपन्यस्य, कथंचिद् देवस्यानुज्ञया देवी गौतमाश्रमं प्राप्य, कंचित् कालं तपश्चरित्वा रजोगुणाधिपाद् ब्रह्मणो देवी गौररूपं प्राप्य, नीलरूपकोशमुत्सृष्टवती ; ततः कोशादुद्भूता **कौशिकी**त्युक्तम् ।

"तत्कोशं सहसोत्सृज्य **गौरी** सा समजायत ।
तत्कोशादात्मनोत्सृष्टात् **कौशिकी** नाम नामतः ॥

**काली** कालाम्बुदप्रख्या कन्यका समपद्यत ।
सा तु मायात्मिका शक्तिर्योगनिद्रा तु वैष्णवी ॥

शङ्खचक्रत्रिशूलादिसायुधाष्टमहाभुजा ।
सौम्या घोरा च मिश्रा च त्रिणेत्रा चन्द्रशेखरा ॥

अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी ।"

इति प्रत्यागतया देव्या देवं प्रति **कौशिकी** महिमा कथित इति च ; तत्रैवोक्तम्—

"किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया ।
तादृशी कन्यका लोके न भूता न भविष्यति ॥

तस्या वीर्यं बलं विन्ध्ये निलयं विजयं तथा ।
सुम्भस्य च निसुम्भस्य मारणं च रणे तथा ॥

प्रत्यक्षफलदानं च लोकाय भजते सदा ।
देवानां रक्षणं चैव ब्रह्मा विज्ञापयिष्यति ॥"

इति ॥ ४ ॥

इति चतुर्थः श्लोकः (४)

---

विश्वेश्वरीति महिषान्तकरीति यस्या
नारायणीत्यपि च नामभिरङ्कितानि ।
सूक्तानि पङ्कजभुवा च सुरर्षिभिश्च
दृष्टानि पावकमुखैश्च शिवां भजेताम् ॥ ५ ॥

विश्वेश्वरीतीति । **प्रथमाध्याये** ब्रह्मणा कृतं स्तोत्रं तेन दृष्टं तत्, "विश्वेश्वरीं जगद्धात्रीम्" इति विश्वेश्वरीनाम्नोपक्रमात्; **चतुर्थाध्याये** यत् स्तोत्रम्, महिषासुरवधानन्तरं देवैरिन्द्रादिभिः कृतम्, तद् देवैर्महर्षिभिश्च दृष्टम्;

"देव्या यया ततमिदं जगदात्मशक्त्या
निःशेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताः स्म विदधातु शुभानि सा नः ॥"

इति स्तोत्रोपक्रमश्लोकेऽखिलदेवमहर्षिपूज्यत्वविशेषणात् ।

"ततः सुरगणाः सर्वे देव्या इन्द्रपुरोगमाः ।
स्तुतिमारेभिरे कर्तुं निहते महिषासुरे ॥"

इति स्तोत्रोपक्रमे तत्र देवान् प्रति स्तोत्रत्रयफलप्रतिपादके देवीवचने;

"युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ।
ब्रह्मणा च कृतायाश्च प्रयच्छन्ति शुभां गतिम् ॥"

इति ब्रह्मर्षीणां स्तुतिकर्तृत्वस्य च प्रतिपादनाच्च **तन्महिषान्तकरीसूक्तम्** । शुम्भवधानन्तरमेकादशाध्याये;

"देव्या हते तत्र महासुरेन्द्रे
सेन्द्राः सुरा वह्निपुरोगमास्ताम् ।
कात्यायनीं तुष्टुवुरिष्टलाभाद्
विकासिवक्त्राब्जविकाशिताशाः ॥"

इति । "देवि प्रपन्नार्तिहरे प्रसीद" इत्यादियदग्निमुखैर्देवैः कृतं स्तोत्रम्, तत् तैरेव दृष्टं **तन्नारायणीसूक्तम्** । तत्र "नारायणि नमोऽस्तु ते" इति बहुधाभ्यासात् । त्रीण्येतानि स्तोत्राणि अकृतकानादिस्तोत्ररूपाणि ब्रह्मादिभिर्दृष्टानि, परं न कृतैः कृतानीत्येतदग्रिमपाञ्चरात्रवचनोदाहरणेन स्पष्टीभविष्यति ॥ ५ ॥

**इति पञ्चमः श्लोकः (५)**






उत्पत्तिदैत्यहननस्तवनात्मकानि
संरक्षकाण्यखिलभूतहिताय यस्याः ।
सूक्तान्यशेषनिगमान्तविदः पठन्ति
तां विश्वमातरमजस्रमभिष्टवीमि ॥ ६ ॥

उत्पत्तीति । **प्रथममध्यमोत्तमेषु** चरितेषु आविर्भावो दैत्यहननं स्तवनं चेति त्रयमाम्नायितम् । अतस्त्रीण्यपि प्रत्येकं त्रितयात्मकानि एतानि सर्वात्मना सर्वेषां संरक्षकाणीत्येतद् **एकादशाध्याये** दैव्यैव देवान् प्रति महता प्रपञ्चेन प्रतिपादितम् । तानि लोकरक्षणार्थं पठन्तीत्येतदग्रिम**पाञ्चरात्र**वचनोदाहरणेन [1]स्फुटीभविष्यति ॥ ६ ॥

इति षष्ठः श्लोकः (६)

---

यं वैप्रचित्तपुनरुत्थितसुम्भमुख्यै-
र्दुर्भिक्षघोरसमयेन च कारितासु ।
आविष्कृतास्त्रिजगदार्तिषु रूपभेदा-
स्तैरम्बिका समभिरक्षतु मां विपद्भ्यः ॥ ७ ॥

**यमिति । एकादशाध्याये** नारायणीस्तोत्रेण स्तुतया देव्या पुनरुत्थितसुम्भनिसुम्भवैप्रचित्तवधादिना लोकानुग्रहार्थं करिष्यमाणा **नन्दारक्तदन्ता**द्यवतारा वर्णिताः । तदर्थसंग्रहोऽयं श्लोकः ॥ ७ ॥

इति सप्तमः श्लोकः (७)

---

सूक्तं यदीयमरविन्दभवादिदृष्ट-
मावर्त्य देव्यनुपदं सुरथः समाधिः ।
द्वावप्यवापतुरभीष्टमनन्यलभ्यं
तामादिदेवतरुणीं प्रणमामि मूर्ध्ना ॥ ८ ॥

**सूक्तमिति** । "नमो देव्यै महादेव्यै शिवायै सततं नमः" इत्यादिकं सुम्भनिसुम्भवधार्थिभिः ब्रह्मादिभिः कृतं स्तोत्रं **देवीसूक्तम्**; तद् ब्रह्मादिभिः दृष्टम्; तज्जपन्तौ **सुरथसमाधिनामानौ** राजवैश्यौ स्वसंकल्पितं फलमवापतुरिति **त्रयोदशाध्यायार्थः** संगृहीतः । तत्र, "देवीसूक्तं परं जपन्" इत्यत्र **देवीसूक्त**मिहानुपदं ताभ्यां श्रुतं **नमो देव्यादिकमेव** विवक्षितं, बुद्धिसंनिहितत्वात् ।

---

१. स्पष्टीभविष्यति P.

तदेवं सप्तभिः श्लोकैः कृते देवीमाहात्म्यसंग्रहे सतामसंशयार्थं पाञ्चरात्रलक्ष्मीतन्त्रवचनानि प्रदर्श्यन्ते। तत्रेमानि शक्रं प्रति श्रीमहालक्ष्मीवचनानि—

"महालक्ष्मीरहं शक्र पुनः स्वायंभुवान्तरे।
हिताय सर्वलोकानां जाता महिषमर्दनी॥

मदीयाः शक्तिलेशा ये तत्तद्देवशरीरगाः।
संभूय ते ममाभूवन् रूपं परमशोभनम्॥

आयुधानि च देवानां यानि यानि सुरेश्वर।
तच्छक्तयस्तदाकारा आयुधानि ममाभवन्॥

अभिष्टुता सुरैः साहं महिषं जघ्नुषी क्षणात्।
[1]**महिषान्तरीसूक्तं** सर्वसिद्धिप्रदं तदा॥

देव्या ययादिकं दृष्टं सेन्द्रैर्देवैः सहर्षिभिः[2]।
उत्पत्तिं युद्धविक्रान्तिं स्तोत्रं चेति सुरेश्वर॥

कथयन्ति सुविस्तीर्णं ब्राह्मणा वेदपारगाः।

एवं प्रभावां देवीं तां स्तुवन् ध्यायन् नमन्नपि।
लभते च फलं शाश्वदाधिपत्यमनश्वरम्॥

योगनिद्रा हरेरुक्ता या सा देवी दुरत्यया।
[3]महाकालीतनुं विद्धि तां मां देवीं सनातनीम्॥

[4]मधुकैटभनाशे हि मोहितौ च तया तदा।
जघ्नाते वरलाभेन देवदेवेन विष्णुना॥

[5]**विश्वेश्वर्यादिकं** सूक्तं दृष्टं तद् ब्रह्मणा तदा[6]।
स्तुतये योगनिद्राया मम देव्याः पुरंदर॥

एषा सा वैष्णवी माया महाकाली दुरत्यया।
स्तुत्या वशीकृता कुर्याद् वशे स्तोतुश्चराचरम्॥

---

१. इदं च सूक्तं मार्कण्डेयपुराणे देवीमहात्म्ये चतुर्थाध्याये पठितं द्रष्टव्यम्।

२. दृष्टं देवैर्महर्षिभिः M. ३. महाकाल्यास्तनुं M. ४. मधुकैटभनाशार्थं M.

५. इदं चोपाख्यानं मार्कण्डेयपुराणे देवीमाहात्म्ये प्रथमाध्याये पठितम्। ६. पुरा M.

अस्या देव्याः समुत्पत्तिश्चरितं स्तोत्रमित्यपि ।
हिताय सर्वभूतानां धार्यन्ते ब्रह्मवादिभिः ॥

[1]तामसे त्वन्तरे शक्र [2]महाविद्या हि या परा ।
गौरीदेहात् समुद्भूता कौशिकीति तदा ह्यहम् ॥

वधाय दुष्टदैत्यानां [3]तथा सुम्भनिसुम्भयोः ।
रक्षणाय च लोकानां देवानामुपकारिणी ॥

मदीयाः शक्तयो यास्ता देवश्रेष्ठशरीरगाः ।
तास्तास्तद्रूपधारिण्यः [4]साहाय्यं विदधुर्हि मे ॥

ताभिर्निहत्य दैत्येन्द्रान् हन्तव्या ये तथा तया ।
संहृत्यात्मनि ताः सर्वाः मदीया विप्रुषोऽखिलाः ॥

अहं निजघ्नुषी पश्चात् तयोः सुम्भनिसुम्भयोः ।
"देवि प्रपन्नार्तिहरे प्रसीदे"-त्यादिकं तथा ॥

[5]नारायणीस्तुतिर्नाम सूक्तं परमशोभनम् ।
स्तुतयो मे तदा दृष्टा देवैरग्निपुरोगमैः ॥

एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ।
कौशिकी सर्वदेवेश[6] बहुकामप्रदा ह्यहम् ॥

उत्पत्तिर्युद्धविक्रान्तिः स्तुतिश्चेति पुरातनैः ।
पठ्यते त्रितयं विप्रैर्वेदवेदाङ्गपारगैः[7] ॥

वैवस्वतेऽन्तरे चोभौ[8] पुनः सुम्भनिसुम्भकौ ।
उत्पत्स्येते वरोन्मत्तौ देवोपद्रवकारिणौ ॥

नन्दगोपकुले जाता यशोदागर्भसंभवा ।
तावहं नाशयिष्यामि [9]सुनन्दा विन्ध्यवासिनी ॥

---

१. तापसे M. २. महाविद्याभिधा परा M. ३. तदा M. ४. सहायम् M.

५. नारायणीस्तुतिः मार्कण्डेयपुराणे एकादशोऽध्याये पठिता द्रष्टव्या ।

६. सर्वदेवेशी M. ७. वेदवेदान्तपारगैः M. ८. चैतौ M.

९. सुनन्दा - रक्तदन्तिका - शताक्षी-शाकंभरी - दुर्गा - भीमा-भ्रामरीणामुपाख्यानानि मार्कण्डेयपुराणे देवीमाहात्म्ये एकादशाध्याये द्रष्टव्यानि ।

पुनश्चाप्यतिरौद्रेण रूपेण पृथिवीतले ।
अवतीर्य हनिष्यामि वैप्रचित्तान् महासुरान् ॥
[1]भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तांश्च दानवान् ।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ।
स्तुवन्तो व्याहरिष्यन्ति सततं **रक्तदन्तिकाम्** ॥
तस्मिन्नेवान्तरे शक्र चत्वारिंशत्तमे युगे ।
सर्वतः शतवार्षिक्यामनावृष्ट्यामनम्भसि ॥
मुनिभिः संस्मृता भूमौ संभविष्याम्ययोनिजा ।
ततः शतेन नेत्राणां निरीक्षिष्याम्यहं मुनीन् ॥
कीर्तयिष्यन्ति शतशः **शताक्षीमिति** मानवाः ।
तदाहमखिलं लोकमात्मदेहसमुद्भवैः ॥
भरिष्यामि शुभैः शाकैराविष्टैः प्राणधारकैः[2] ।
**शाकंभरीति** मां देवास्तदा स्तोष्यन्ति वासव ॥
तत्रैव च हनिष्यामि **दुर्गमाख्यं** महासुरम् ।
**दुर्गादेवीति** विख्यातिं ततो यास्याम्यहं भुवि ॥
**शाकंभरीं** स्तुवन् ध्यायन् शक्र संपूजयन्नमन् ।
अक्षय्यामश्नुते शीघ्रमन्नपानोद्भवां रतिम् ॥
चतुर्युगे च पञ्चाशत्तमे मुनिभिरर्थिता ।
सुन्दरं चातिभीमं च रूपं कृत्वा हिमाचले ॥
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ।
ततो मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः ॥
भीमे देवि प्रसीदेति **भीमामभयदायिनीम्** ।
युगे षष्टितमे कश्चिद्**अरुणो** नाम दानवः ॥
[3]मनुजानां मुनीनां च महाबाधां करिष्यति ।
तत्राहं [4]भ्रामरं रूपं कृत्वासंख्येयषट्पदा ।
त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥

---

१. भक्षयन्त्यागतानुग्रान् M.
२. धारणैः M.
३. मनुष्याणाम् M.
४. भ्रमरम् M.

भ्रामरीति च मां लोके तदा स्तोष्यन्ति सवदा ।
इत्थं यदा यदा बाधा [1]दानवोत्था भविष्यति ॥

तदा तदावतीर्याहं हनिष्यामि महासुरान् ।
अमी ते लेशतः शक्र दर्शिताः परमाद्भुताः ॥

अवतारा निरातङ्का मदीयाः केवलाह्वयाः ।
एतेषां परमा प्रोक्ता कूटस्था सा महीयसी ॥

महालक्ष्मीर्महाभागा प्रकृतिः परमेश्वरी ।
अमुष्या स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः ॥

[2]नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम् ।
इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह ॥

,शानतीत्य सकलानैश्वर्यं महदश्नुते ।
अमुष्याः सावताराया महालक्ष्या ममानघ ।
जन्मानि चरितैः सार्धं स्तोत्रैर्वैभववादिभिः[3] ॥

कथितानि पुरा शक्र वसिष्ठेन महात्मना ।
[4]स्वारोचिषेऽन्तरे राज्ञे सुरथाय महात्मने ॥

समाधये च वैश्याय प्रणतायावसीदते ।
भक्तिश्रद्धावता नित्यं वसिष्ठेन कृतेति मे ॥

हृदि स्थिता सदा सेयं जन्मकर्मावलिस्तुतिः ।
एतां द्विजमुखाच्छ्रुत्वा ह्यधीयानो नरः सदा ॥

विधूय निखिलां मायां सम्यग् ज्ञानं समस्नुते ।
सर्वां संपदमाप्नोति धुनोति सकलापदः ॥

मम प्रभावात् सौभाग्यं कीर्तिं चैव समश्नुते ।''

इति । अत्र कूटस्था महालक्ष्मीः प्रथममध्यमोत्तमचरितदेवतात्रयसमष्टिरूपा सकलदेवीमाहात्म्यदेवता विवक्षिता । "सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी'' इति रहस्याध्यायेषु प्राधानिकाध्याये

---

१. दानवेभ्यः M  २. इदं च मार्कण्डेयपुराणे देवीमाहात्म्ये पञ्चमाध्याये पठितम् ।

३. दायिभिः M.  ४. इदं चोपाख्यानं मार्कण्डेयपुराणे देवीमाहात्म्ये प्रथमाध्याये दृश्यते ।

तस्यां महालक्ष्मीपदप्रयोगात्, नमो देव्यादि हि ब्रह्मादिभिः कृतं स्तोत्रं तस्या स्तोत्रमिति तामुद्दिश्य तपश्चरद्भ्यां **सुरथसमाधिभ्यां** तदेव सूक्तं जप्तमिति युज्यते ।

अत्र सकल**देवीमाहात्म्य**प्रतिपाद्या महालक्ष्मीः शिवशक्तिरम्बिकैव ;

"सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा ।
महालक्ष्मीरिति ख्याता देवी सर्वगुणान्विता ॥"

इति **शिवपुराणे** तस्यामपि महालक्ष्मीपदप्रयोगात् । "श्रियं लक्ष्मीमौपलामम्बिकां गाम्" इत्या**युष्यसूक्ते** तस्यां लक्ष्मीपददर्शनेन तस्मिन् "सन्महत्—" इत्यादिसूत्रेण पूजावाचिमहत्पदसमाससंभवाच्च । न तु भगवच्छक्तिरिह महालक्ष्मीः ; दुर्गायाः शिवशक्त्यंशत्वस्य प्रसिद्धतरत्वात् । अत एव **हरिवंशे** शम्बरवधार्थं प्रद्युम्नाय दत्तवता नारदेन दुर्गया शम्बराय दत्तो मुद्गरः पार्वत्या दत्त इति व्यवहृतः ;

"अस्य देवरिपोस्तात मुद्गरो नित्यपूजितः ॥
[1]पार्वत्या परितोषेण दत्तः शत्रुनिबर्हणः ।
अजय्यश्चैव संग्रामे देवदानवमानवैः ॥

तदस्त्रप्रतिघातार्थं देवीं त्वं स्मर्तुमर्हसि[2] ।
स्तुत्या चैव नमस्या च महादेवी रणोत्सुकैः ॥
[3]तत्रैव क्रियतां यत्नः संग्रामे रिपुणा सह ।"

इति । अयं च मुद्गरो दुर्गया शम्बराय दत्त इति तदनन्तरं प्रद्युम्नकृत एव स्तोत्रे व्यक्तम् । यथा—

"नमस्ते सुम्भहननि निसुम्भहृदिदारिणि[4] ।
कालरात्रिं नमस्येऽहं कुमारीं चापि नित्यवत् ॥

कान्तारवासिनीं देवीं नमस्येऽहं कृताञ्जलिः ।
श्रीविन्ध्यवासिनीं देवीं रणदुर्गां रणप्रियाम्[5] ॥

---

१. पार्वत्यां परितुष्टायाम् P. २. °प्रविघातार्थं देवीं स्मर्तुमिहार्हसि P. ३. तत्र वै P.
४. नमस्ये सुम्भमथनीं निसुम्भमथनीमपि-इति मुद्रितकोशे.
५. अस्यानन्तरं मुद्रितकोशे केचन श्लोकाः वर्तन्ते—
नमस्यामि महादेवीं जयां च विजयां तथा ।
अपराजितां नमस्येऽहमजितां शत्रुनाशिनीम् ॥
घण्टाहस्तां नमस्यामि घण्टामालाकुलां तथा ।

त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् ।
सिंहवाहां नमस्यामि सिंहप्रवरकेतनाम् ॥
इति कामवचस्तुष्टा दुर्गा संप्रीतमानसा ।''

इत्यादि तदनन्तरसंदर्भेणाप्येतद् व्यक्तम् ।

यत्तु—**लक्ष्मीतन्त्र**विष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति स्वावतारभेदत्वमुक्तम्; तत् पार्वत्यभेदाभिप्रायं स्वमहिमख्यापनार्थमिति नेतव्यम् ॥ ८ ॥

इत्यष्टमः श्लोकः (८)

---

अथ **वराहपुराणो**क्तमहिमानं संगृह्णाति—

**माहिष्मतीतनुभवं च रुरुं च हन्तु-**
**माविष्कृतैर्निजरसादवतारभेदैः ।**
**अष्टादशाहतनवाहतकोटिसंख्यै-**
**रम्बा सदा समभिरक्षतु मां विपद्भ्यः ॥ ९ ॥**

**माहिष्मतीति** । एवं **वराहपुराणे** कथा—"कदाचित् कैलासगिरौ पिनाकिन्यास्थानमास्थितवति चतुर्मुखः समागत्य दैत्यबाधां तस्मै निवेदयामास । तदा नारायणोऽपि समागतः । तेषाम् अन्योन्यं पश्यतां दृष्टिसमागमे काचन कन्या जज्ञे । सा तेषां वचनात् स्वगुणैः विभक्ता त्रिशरीरा बभूव ।

तत्र सात्त्विकी ब्रह्मणः सृष्टिशक्तिः; सा तच्छरीरं प्रविष्टा । तदाप्रभृति तदीया सृष्टिः ववृधे । राजसी वैष्णवी पालनशक्तिः; सा मन्दरे स्वसदृशसौन्दर्यशालिनीः अष्टादशकोटिसंख्याः कुमारीः सृष्ट्वा, तत्र पुरीं निर्माय ताभिः सह विहरमाणा स्थिता । तस्मिन् विप्रचित्तेः **तनयायां माहिष्मत्यां** सिन्धुद्वीपं तपस्यन्तं तदाश्रमात् अपसार्य स्वयं तत्र सखीभिः सह विहर्तुं महषीरूपमास्थाय तं भीषितवत्यां तेन, 'महिष्येव भव' इति शप्तायां सिन्धुद्वीपस्य विद्युत्मत्या दैत्यकन्यया दर्शनेन स्कन्नं शुक्लं पीतवत्याम् उत्पन्नेन महिषासुरेण नारदप्रेरणया तां कामयमानेन प्रहितो दूतः तस्याः प्रतिहार्या जययैव तिरस्कृतः, युद्धार्थम् आगतः महिषासुरः तया अष्टादशकोटिसंख्यकन्यापरिवारसहितया विंशतिभुजया सिंहाधिरूढया निहतः ।

---

एकानंशां नमस्यामि गायत्रीं यज्ञसत्कृताम् ॥
सावित्रीं चापि विप्राणां नमस्येऽहं कृताञ्जलिः ।
रक्ष मां देवि सततं संग्रामे विजयं कुरु ॥ इति ॥

तामसी रौद्री संहारशक्तिः; तस्यां नीलगिरौ स्थितायां समुद्रजलमध्ये पुरं निर्माय स्थितेन रुरुनाम्ना दैत्येन नवकोटिसंख्या भीषणाकारा नानाविधायुधधरा देव्यो निर्ययुः। ताभिः सहितया तया समरे स दैत्यो निहत इतीदं कथाद्वयमत्र संगृहीतम् ॥ ९ ॥

इति नवम श्लोकः (९)

---

एतच्चरित्रमखिलं लिखितं हि यस्याः
संपूजितं सदन एव निवेशितं वा।
दुर्गं च तारयति दुस्तरमप्यशेषं
श्रेयः प्रयच्छति च सर्वमुमां भजेताम् ॥ १० ॥

एतदिति। वराहपुराणे वचनानि—

"य इदं शृणुयात् सर्गं त्रिशक्त्याः परमं शिवम्।
सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् ॥

[1]यश्चैनं शृणुयाद् भक्त्या नवम्यां नियतः स्थितः।
स राज्यमतुलं लब्ध्वा भयेभ्यश्च प्रमुच्यते ॥

यस्यैतल्लिखितं गेहे सदा तिष्ठति धारितम्।[2]
न तस्याग्निभयं घोरं सर्पचोरादिजं भवेत् ॥

[3]यश्चैतत् प्रजपेद् भक्त्या पूजयेत् स्थापितं बुधः।
तेन लब्धं भवेत् सर्वं त्रैलोक्यं सचराचम् ॥

जायन्ते पशवः पुत्राः धनं धान्यं वरस्त्रियः।
[4]रत्नान्यश्वा गजा भृत्या ग्रामश्चाशु भवन्त्युत ॥
यस्येदं तिष्ठते गेहे तस्य सर्वमिदं भवेत्।"[5]

इति ॥ १० ॥

इति दशमः श्लोकः (१०)

---

१. यश्चेमं शृणुयान्नित्यं P. २. धारिणी P. ३. यश्चेमं पूजयेद् भक्त्या पुस्तकेऽपि स्थितं बुधः P. ४. रत्नान्यश्वास्तथा गावो दासा दास्यो भवन्ति हि P. ५. तस्य संपद् भवेद् ध्रुवम्

यत्पूजनस्तुतिनमस्कृतिभिर्भवन्ति
प्रीताः पितामहरमेशहरास्त्रयोऽपि ।
तेषामपि स्वकगुणैर्ददती वपूंषि
तामीश्वरस्य तरुणीं शरणं प्रपद्ये ॥ ११ ॥

**यदिति** । इत्थं **वराहपुराणे** कथा, **वेत्रासुरेण** वित्रासिता देवा ब्रह्माणं शरणं जग्मुः । ब्रह्मा तदा गङ्गाजले निमज्ज्य जपनिष्ठः स्थितः । देवानां 'त्राहि त्राहि' इत्याक्रोशमाकर्ण्य चिन्तयतः तस्मात् कन्यारूपा महामाया प्रादुर्बभूव । सायुधाष्टमहाभुजा सा महादेवी जलात् निर्गत्य ;

[1]"यस्तु सायं तथा प्रातरिदं स्तोत्रं पठिष्यति ।
त्वयेरितं महादेव तस्य देव्या समं भवेत् ॥
वरदो भव देवेश सर्वापत्सूद्धरस्व माम् ।"

इत्युवाच ;

"त्वया देवि महत्कार्यं कर्तव्यं चान्यदस्ति नः ।
भविष्यन् महिषाख्यस्य असुरस्य विनाशनम् ॥"

इति चोवाचेति । अत्र महेश्वरेण देवी स्तुतेति संतुष्टेन ब्रह्मणैवमुक्तमित्युक्तिभङ्ग्या ;

"नवम्यां च सदा पूज्या इयं देवी समाधिना ।[2]
वरदा सर्वलोकानां भविष्यति न संशयः ॥

नवम्यां यस्तु पिष्टाशी [3]पूजयिष्यति मानवः ।
नारी वा तस्य संपन्नं भविष्यति मनोगतम् ॥"

इति ब्रह्मोक्त्या च देव्या स्तुत्यादिभिः ब्रह्मणः प्रीतिरवसीयते । महेश्वरं प्रति ब्रह्मवचनेनैव देवीस्तुत्या महेश्वरस्य प्रीतिरवसीयते । **वराहपुराणे** त्रिशक्तिनिर्णयावसानवचनैरपि तथावसीयते । तान्येवं पठ्यन्ते—

"नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः ।
या रौद्री तामसीशक्तिः सा चामुण्डा प्रकीर्तिता ॥
आष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते ।
[4]या सा तु राजसीं शक्तिः पालिनी सैव वैष्णवी ॥

---

१. यश्च सायं तदा P.
२. कर्तव्यं चान्यदस्ति नः । P
३. भविष्यति हि मानवः P.
४. या विष्णो राजसी शक्तिः P.

या ब्रह्मशक्तिः सत्त्वस्था [1]सानन्ता वै प्रकीर्तिता ।
एतासां सर्वभेदेषु पृथगेकैकशो धरे ॥
सर्वासां भगवान् रुद्रः [2]सर्वगत्वात् पतिर्भवेत् ।
यावन्त्यस्ता महाशक्त्यस्तावद्रूपाणि शंकरः ॥
कृतवांस्तांश्च भजते पतिरूपेण सर्वदा ।
यश्चाराधयते [3]तास्तु तस्य रुद्रेषु तोषते ॥
सिद्ध्यन्त्यस्तास्तदा देव्यो मन्त्रिणो नात्र संशयः ।''

इति देव्या स्तुत्या हरेः प्रीतिः । हरिवंशे हरिणा प्रोक्तस्यास्या स्तवस्यावसाने देवीं प्रति—

" ये च त्वां मत्प्रभावज्ञाः प्रणमिष्यन्ति मानवाः ।
न तेषां दुर्लभं किंचित् पुत्रतो धनतोऽपि वा ॥
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ॥
त्वां तु स्तोष्यन्ति ये भक्त्या स्तवेनानेन सुव्रते ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥''

इति हरेरेवं वचनेनावगम्यते । हरिवंशे अनिरुद्धकृतदेवीस्तोत्रावसाने तु देव्या नामकीर्तनमात्रेण ब्रह्मादिकस्य सर्वस्य जगतः प्रीतिरुक्ता ;

" ब्रह्मा विष्णुश्च शक्रश्च चन्द्रसूर्याग्निमारुताः ।
अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च ॥
मरुता सह पर्जन्यो धाता भूमिर्दिशो दश ।
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा ॥
सरितः सागराश्चैव नागाविद्याधरोरगाः ।
तथा यक्षाः सुपर्णाश्च गन्धर्वाप्सरसां गणाः ॥
कृत्स्नं जगदिदं प्रीतिं देव्या नामानुकीर्तनात् ।''

इति विष्णुपुराणेऽपि देवीस्तुत्या भगवतः प्रीतिरुक्ता ;

---

१. सानन्ता तु P. २. सर्वगश्च पतिर्भवेत् P.
३. यश्चाराधयते तस्य रुद्रस्तुष्टो भविष्यति ।
सिद्ध्यन्ति तस्य कार्यश्च मनसा चिन्तिता अपि ॥ P.

"ये त्वामार्येति दुर्गेति वेदगर्भाम्बिकेति च ।
भद्रेति भद्रकालीति क्षेम्या क्षेमंकरीति च ॥
प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्तयः ।
तेषां हि प्रार्थितं सर्वं मत्प्रसादाद् भविष्यति ॥"

इति ॥ ११ ॥

इत्येकादशः श्लोकः (११)

---

**कान्तारमध्यदृढलग्नतयावसन्ना**
**मग्नाश्च वारिधिजले रिपुभिश्च रुद्धाः ।**
**यस्याः प्रपद्य चरणौ विपदस्तरन्ति**
**सा मे सदास्तु हृदि सर्गजगत्सवित्री ॥ १२ ॥**

**कान्तारेति** । हरिवंशे देवीं प्रति भगवद्वचनानि—

"कान्तारेष्वसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ॥"

इति । तदर्थोऽत्रानुसंगृहीतः ॥ १२ ॥

इति द्वादशश्लोकः (१२)

---

**बन्धे वधे महति मृत्युभये प्रसक्ते**
**चित्तक्षये च विविधे च महोपतापे ।**
**यत्पादपूजनमिह प्रतिकारमाहुः**
**सा मे समस्तजननी शरणं भवानी ॥ १३ ॥**

**बन्ध इति** । हरिवंशे देवीं प्रति भगवद्वचनानि—

"संग्रामेषु च सर्वेषु [1]ह्यग्निप्रज्वलितेषु च ।
नदीतीरेषु [2]घोरेषु कान्तारेषु भयेषु च ॥
प्रवासे राजबन्धे च शत्रूणां च प्रदर्शने ।
प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः ॥

---

१. वह्निप्रज्वलितेषु चP. २. चौरेषुP.

नृणां बन्धं वधं पुत्रभयं नाशं धनक्षयम् ।
व्याधिं मृत्युभयं चैव पूजिता शमयिष्यति ॥''

इति । **वराहपुराणे** महिषासुरवधानन्तरं ब्रह्मादिकृतस्तोत्रावसाने तेषां वचनानि—

"शरणं त्वां प्रपद्यन्ते [1]ये देवीं परमेश्वरीम् ।
न तेषां जायते किंचिदशुभं रणसंकटे ॥
[2]सर्पव्याघ्रभये घोरे चोरराजभये तथा ।
निगलस्थोऽपि बद्धश्च त्वां स्मरेद् यस्तु मानवः ॥
सोऽपि बन्धैर्विमुक्तः स्यात् ससुखं वर्धते चिरम् ।''

इति ॥ १३ ॥

**इति त्रयोदशः श्लोकः (१३)**

---

**बाणासुरप्रहितपन्नगबन्धमोक्ष-**
**स्तद्बाहुदर्पदलनादुषया च योगः ।**
**प्राद्युम्निना द्रुतमलभ्यत यत्प्रसादात्**
**सा मे शिवा सकलमप्यशुभं क्षिणोतु ॥ १४ ॥**

**बाणासुरेति ।** अनेन श्लोकेन संगृहीतमर्थजातं **हरिवंशे** नागपाशबन्धनानन्तरप्रवृत्तकथासंद सामर्थ्यादवगम्यते । तथाहि—तत्र बाणासुरप्रहितैः नागपाशैः बद्धम् अनिरुद्धं दृष्ट्वा तदर्थं कृष्ण निवेदयितुं नारदे द्वारवतीं गतवति सति ;

"नष्टोऽयं दानवः क्रूरो युद्धं प्राप्य न संशयः ।
स गत्वा नारदस्तत्र शङ्खचक्रगदाधरम् ॥
ज्ञापयिष्यति तत्त्वेन इममर्थं तथैव तत् । ''

इत्यनिरुद्धस्य चिन्तनम् ।

"[3]किमर्थं भीरु माभैस्त्वं माभैषीः शुभलोचने ।
पश्य सुश्रोणि संप्राप्तं मत्कृते मधुसूदनम् ॥
[4]यस्य शङ्खस्वनं श्रुत्वा बाहुशब्दं बलस्य च ।
दानवा नाशमेष्यन्ति गर्भाश्चासुरयोषिताम् ॥ ''

---

१. ये देवि परमेश्वरि P. २. यश्च व्याघ्रभये P.
३. किमिदं रुदसे भीरु माभैस्त्वं मृगलोचने P ४. यस्य शङ्खध्वनिं P

इति तेन कृतमुपाश्वासनं चोपन्यस्ययत्। "ततो देवीं स कौमारीं रक्षार्थं शरणं गतः" इत्युक्तम्। यच्च अनिरुद्धेन कृतम्;

"महेन्द्रविष्णुभगिनीं नमाम्यात्महिताय वै।
मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः ॥"

इत्यादि,

"त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येत बन्धनात्।
अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे ॥"

इत्यन्तम्। द्रौपदीवस्त्रापहरणकाले सौभवधव्यासङ्गेनेव केनचित् महता देवकार्यसङ्गेन कृष्णस्य इदानीमिहागमने विघ्नो मा भूत्। शीघ्रमागत्य भगवान् अस्मान् बाणकृतात् तद्गृहे विरोधात् स्वात्मानं मोचयितुम् इत्येतदर्थं च; देवी तु, 'कृष्णेनैव अनिरुद्धस्य नागपाशमोक्षः कार्यः' इति देवकृतां मर्यादाम् अन्वीक्ष्य तस्य वेदनापरिहाराय दृढं नागपाशबन्धं शिथिलीकृत्य, शीघ्रं कृष्णागमननिवेदनेन तमाश्वासितवतीति तदनन्तरमुक्तम्।

"नागपाशेन बद्धस्य हृतस्योद्धतचेतसः।
स्फोटयित्वा कराग्रेण पञ्जरं वज्रसंनिभम् ॥
[1]रुद्धं बाणपुरे वीरमनिरुद्धमभाषत।
[2]सान्त्वयन्ती च सा देवी प्रसादाभिमुखी तदा ॥"

इति। श्रीदेव्युवाच—

"चक्रायुधो मोक्षयितानिरुद्ध
त्वां बन्धनादाशु सहस्व कालम्।
छित्वाशु बाणस्य च बाहुचक्रं
पुरीं निजां नेष्यति दैत्यसूदन ॥"

इति।

यत्तु तदनन्तरम्—"नमोऽस्तु ते देवि वरप्रदे शिवे" इत्यादि;

"प्रीयतां मे जगन्नाथ शैलपुत्रि वसुंधरे।
त्रायस्व मां महादेवि नारायणि नमोऽस्तु ते ॥
नमामि शिरसा देवीं बन्धनस्थो विमोचितः।
रुद्रप्रिये महाभागे भक्तानामार्तिनाशिनि।
नमोऽस्तु ते जगन्नाथे प्रिये दान्ते महाव्रते ॥

---

१. बद्धं बाणपुरे वीरं सानिरुद्धतमभाषत P. २. सान्त्वयन्ती वचो देवी P.

भक्तिप्रिये जगन्नाथे शैलपुत्रि वसुंधरे ।

त्राहि मां त्वं विशालाक्षि नारायणि नमोऽस्तुते ॥

त्रायस्व सर्वदुःखेभ्यो दानवानां भयंकरि ।"

इत्यन्तं पुनः स्तवनं शीघ्रं मोचनीयोऽयमिति मयि कृष्णस्य प्रीतिमुत्पादयेति प्रार्थनां "भावश्च क्रियतामस्य हन्तुमेतौ महासुरौ" इति देवीमाहात्म्यगतब्रह्मकृतस्तोत्राम्नातवचनेन हि दे भगवद्भावप्रेरकत्वमवगतम् ॥ १४ ॥

इति चतुर्दशः श्लोकः (१४)

---

एवं प्राप्तां विपदं निवारयितुं भगवद्भावप्रेरणाय रुक्मिण्या कृतं देव्याराधनं संगृह्णाति—

**पापः पुलस्त्यतनयः पुनरुत्थितो मा-**
**मद्यापि हर्तुमयमागत इत्युदीतम् ।**
**यत्सेवनेन भयमिन्दिरयावधूतं**
**तामादिदेवतरुणीं शरणं गतोऽस्मि ॥ १५ ॥**

**पाप** इति । भागवते रुक्मिण्युद्वाहार्थं समागत्य कृताभ्युदयिकम् अनन्तरदिने रुक्मिणीम् [illegible] उद्युञ्जानं शिशुपालम् अन्वीयन्त्याः प्रसह्य हरणार्थं कृष्णागमनं प्रतीक्षमाणाया रुक्मिण्याः चिन्ता वर्णिता—

"भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ।
[1]प्रत्यापत्तिमपश्यन्ती द्विजं साचिन्तयत् तदा ॥
अहो त्रियामान्तरित उद्वाहो मेऽल्पराघसः ।
नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ॥
सोऽपि नावर्ततेऽद्यापि मत्संदेशहरो द्विजः ।
अपि मय्यनवद्यात्मा दृष्ट्वा किंचित् जुगुप्सितम् ॥
मत्पाणिग्रहणे नूनं नायाति ह्यकृतोद्यमः ।
दुर्भगाया हि मे धाता नानुकूलो महेश्वरः ॥
देवी सा विमुखी गौरी रुद्राणी गिरिजा सती ।"

इति । ततः कृष्णाह्वानाय प्रेषिते ब्राह्मणे प्रत्यागत्य बलदेवसहितं कृष्णं समागतं निवेदितवति [illegible] रुक्मिण्या कृतं देव्याराधनम् ।

---

१. प्रत्यासत्ति P

" कन्या चान्तःपुरं प्रागात् भटैर्गुप्ताम्बिकालयम् ।
पद्भ्यां विनिर्ययौ द्रष्टुं [1]भवानीपादपल्लवम् ॥ "

इत्युपक्रम्य इत्थं वर्णितम् ;

" आसाद्य देवसदनं धौतपादकराम्बुजा ।
उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥
तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥
नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसंतानयुतां शिवाम् ।
भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ "

इति । अत्र कृष्णे स्वविवाहोत्कण्ठया समागतेऽपि यन्महत्या भक्त्या समाराधनपूर्वकमेवं प्रार्थनं कृतम् । तत् कृष्णस्य स्वविषयप्रीतिस्थैर्यार्थं संभावितसकलविघ्ननिवारणार्थं चेति स्पष्टमेव । यः पूर्वं लक्ष्म्याः सीतावतारे हर्ता रावणः, स एव शिशुपालो भूत्वा रुक्मिण्यवतारे तदुद्वाहार्थमागत इत्येतन्मूलं कृत्वा लक्ष्म्या उक्तप्रकारेण भयं श्लोके निबद्धम् । इदं रुक्मिण्या कृतं समाराधनं शिवगणपतिकार्तिकेयसहितभवानीरूपाया देव्याः ; न तु क्रियाशक्तिप्रधानदुर्गाख्यायाः । तथाप्यभेदात् तद्रूपानुसंधानेन स्तोत्रं कृतम् ॥ १५ ॥

इति पञ्चदशः श्लोकः (१५)

---

कृष्णपरिग्रहलाभार्थं गोपकन्याभिः कृतं दुर्गारूपेण देव्याराधनं **भागवतोक्तं** संगृह्णाति—

**यद् ध्यानजं सुखमवाप्य मनन्तपुण्यैः**
**साक्षात् तमच्युतपरिग्रहमाश्ववापुः ।**
**गोपाङ्गनाः किल यदर्चनपुण्यमात्राः**
**सा मे सदा भगवती भवतु प्रसन्ना ॥ १६ ॥**

**यदिति ।**

" दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमङ्गलाः ॥
तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणकल्मषाः ॥"

---

१. भवान्याः P

इति भागवते ध्यानप्राप्ताच्युताश्लेषनिर्वृतिरपि प्राचीनसकलशुभकर्मव्यतिरेकेणेत्युक्तम्। साक्षा
वाच्युतालिङ्गनादिः तत्परिग्रहो देव्यर्चनपुण्यमात्रेण लब्ध इत्यपि भागवत एवोक्तम्। तथाहि—
"हेमन्ते प्रथमे मासि नन्दव्रजकुमरिकाः" इत्युपक्रम्य;

"कात्यायनि महामाये महायोगिन्यधीश्वरि।
नन्दगोपसुतं देवि पतिं मे कुरु ते नमः॥
इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः।
एवं मासव्रतं चेरुः कुमार्यः कृष्णचेतसः॥
भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः।"

इति कृष्णपरिग्रहार्थं गोपकुमारीणां देव्या अर्चनमुक्त्वा, ततः प्रसन्नेन कृष्णेन तथैव स्वपरिग्रहो ऽङ्गीकृतः' इति तदनन्तरमुक्तम्;

"संकल्पो विदितः साध्व्यो भवतीनां मदर्चने।
मयानुमोदितः सोंऽसौ सत्यो भवितुमर्हति॥
यात बाला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः।
यदुद्दिश्य व्रतमिमं चेरुरार्यार्चनं सतीः॥"

इति। अत्र आर्यार्चनमेव भगवदर्चनमिति व्यवहृतम्। आर्यार्चनेन भगवत्प्रीतेः हरिवंशादि वचनोदाहरणेन प्राक्प्रपञ्चितत्वात्॥ १६॥

इति षोडशः श्लोकः (१६)

---

अथ सामगानां सामविधिब्राह्मणोक्तप्रकारेण देव्या मुक्तिप्रदत्वं दर्शयति—

**रात्रिं प्रपद्य इति मन्त्रविदः प्रपन्ना-**
**नुद्बोध्य मृत्यवधिमन्यफलैः प्रलोभ्य।**
**बध्वा च तद्विमुखतां प्रतनं नयन्ती-**
**माकाशमादिजननीं जगतां भजेताम्॥ १७॥**

**रात्रिमिति** "तद् गायत्र्यर्थस्य कन्यां कुमारिणीम्" इत्यत्र प्रत्यभिज्ञानात् रात्र्यादिपदानां तत्रान्वयोपपत्तेश्च रात्रिरूपा हि सा, "अस्यास्तनुस्तमोद्वारा निशा दिवसनाशिनी" इति देवीमधिकृत्य **हरिवंशोक्तेः**। **पुनर्भूश्च** असुरवधार्थं नानावतारपरिग्रहात्। अत एव **मयोभूः** प्राणिनां सुखस्य संपादयित्री, कन्या च। "अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी" इति तामधिकृत्य **शिवपुराणोक्तेः**। **शिखण्डिनी** मयूरकलाप-भूषणवती, मयूरकलापध्वजवती वा। **हरिवंशे** कृष्णवाक्येषु;

"शशिरश्मिप्रकाशेन हारेणोरसि राजिता ।
दिव्यकुण्डलपूर्णाभ्यां श्रवणाभ्यां विभूषिता ॥ "

इति देवीवर्णनं प्रस्तुत्य ;

"अङ्गजेन मयूराणामङ्गदेन च भास्वरा ।
ध्वजेन शिखिबर्हाणामुच्छ्रितेन समावृता ॥"

इत्युक्तत्वात् । असुरबन्धनार्थं पाशहस्तां च । **नित्ययुवतिः,** बाल्यवार्धक्यावस्थारहिता च । **कंसमोह-** नार्थावतारे क्षणं शैशवाभिनयेऽपि तदानीमेव यौवनाविष्करणोक्तेः । **कुमारिणी ;** कुत्सितान् असुरान् मारयितुं शीलवती च ॥

एवं देवीविषयमहामन्त्रं लब्ध्वा तेन ये देवीं प्रपद्यन्ते, तेषां पुरतो देवी प्रत्यक्षीभूय तदीयमरणरूप-स्वदेयफलकालपूर्वावधिं बोधयतीत्येतत् स्वर्गादिफलान्तरैः प्रलोभयतीत्येतच्च तत्रैव मन्त्राम्नानानन्तरमुक्तम्—

**"सा हैनमुवाच अस्मिन् संवत्सरे मरिष्यसि अस्मिन्नयने**
**अस्मिन् ऋतौ अस्मिन् मासे अस्मिन्नर्धमासे अस्मिन्**
**द्वादशरात्रे अस्मिन्नहनि अस्यां रात्रौ अस्यां वेलायाम्**
**अस्मिन् मुहूर्ते मरिष्यसि एहि स्वर्गं लोकं गच्छ देवलोकं वा**
**ब्रह्मलोकं वा क्षत्रलोकं वा विरोचमानाम् एहि योनिं प्रविश इति उवाच"**

वक्तीत्यर्थः । **ब्रह्मलोकम् ;** ब्राह्मणजात्या तपः प्रभृतिभिः लब्धव्यं लोकम् । **क्षत्रलोकम् ;** क्षत्रिय-जात्या प्रजापालनादिभिः प्राप्यं लोकम् । अस्मिन् एव वा लोके **विरोचमानाम्** उत्कृष्टां ब्राह्मणादियोनिं प्रविश ।

एवं देव्या प्रलोभितानां प्रपन्नानां सांसारिकफलवैराग्येण मुक्तिप्रार्थनम् । उक्तप्रार्थनमात्रेण रात्र्युपासकानाम् एतावदेव मुक्तिसाधनं नान्यदपेक्षणीयमिति । एतच्च तदनन्तरमाम्नातम्—

**"नाहं प्रवेक्ष्यामि भूतोत्तमाया ब्रह्मणो दुहितुः संरागवस्त्रायाः**
**जायते म्रियते संधीयते च रात्रिस्तु मा पुनातु रात्रिः खमेतत्**
**पुष्पान्तं यत् पुराणम् आकाशं तत्र मे स्थानं कुरु**
**अपुनर्भवाय अपुनर्जन्मने एतावदेव रात्रौ रात्रेर्व्रतं च इति ॥"**

भूतेषु श्रेष्ठायाः **संरागवस्त्रायाः** आर्तवेन रजसा संरक्तवस्त्रायाः, **ब्रह्मणः** ब्रह्मजातेः **दुहितुः** योनिं न प्रवेक्ष्यामि । यतः योनिं प्रविष्टो जायते । जातश्च म्रियते । मृतश्च संधीयते, देहान्तरेण संबध्यते । किं तर्हि फलमपेक्षितमित्याकाङ्क्षायां रात्रिस्त्वित्यादिः, तुशब्दः वैलक्षण्यार्थः । **रात्रिः** देवी मा

**पुनातु** ; जन्मान्तरप्रापककर्मबन्धात् मुञ्चतु । **रात्रिः** इति द्विरुक्तिः आदरार्था । एवं परोक्षविषया प्रार्थिता दे प्रत्यक्षविषया प्रार्थ्यते—**यत् पुराणम् आकाशम्**, परं ब्रह्मलोकरूपम् । एतत् **खम्**, आकाशम्, पुण्यान्तम् पुण्यस्य कर्मफललोपभोगावस्थानस्य अन्तं बहिर्भूतम्, **तत्र** तस्मिन् आकाशे ब्रह्मलोके मम **स्थानं** कु स्थानान्तरेभ्यो विशेषं दर्शयति—**अपुनरिति । अपुनर्भवाय** ; अस्य विवरणम् — अपुनर्जन्म इति । उक्तमन्त्रेण मुक्त्यर्थं देवीप्रपदनेन किंचिदङ्गमस्ति । नाप्युपवासादिव्रतान्तरसमुच्चयापेक्षास्तीत्याह- **एतावदिति । एतावदेव** कर्तव्यं न अस्य अङ्गान्तरम्, **रात्रौ**, रात्रिदेवताविषये । अथ वा रात्रौ प्रपदनं कर्तव्यमित्यर्थः । **रात्रेः** व्रतं च एतावदेव, न उपवासाद्यन्यद् अपेक्ष्यम् अस्तीत्यर्थः । इ शब्दः खण्डपरिसमाप्त्यर्थः ॥ १७ ॥

इति सप्तदशः श्लोकः (१७)

---

एतत् स्तोत्रपठनस्यावश्यकतां द्योतयति—

**देशकालेषु दुष्टेषु देवीचन्द्रकलास्तुतिः ।**
**संध्ययोरनुसंधेया सर्वापद्विनिवृत्तये ॥ १८ ॥**

इत्यष्टादशः श्लोकः (१८)

**इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य-**
**चतुरधिकशतप्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितेन्द्रस्य**
**कृतिष्वन्यतमा दुर्गाचन्द्रकलास्तुतिः संपूर्णा**

**देशेति ।** स्पष्टोऽर्थः ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशत-
प्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितकृता श्रीदुर्गाचन्द्रकलास्तुति-
विवृतिः संपूर्णा

---

सामविधानब्राह्मणोक्तं

# रात्रिसूक्तम्

श्रीसायणाचार्यविरचितभाष्यसाहितम्

अथ पुनर्जन्माभावकामस्य कांचिद् रात्र्युपासनां विवक्षुः तत्प्रतिजानीते—

**अथ यः कामयेत पुनर्न प्रत्याजायेयम्, इति (१)**

**अथेति।** **अथशब्दः;** अधिकारे। **यः** पुमान् अनेकजन्मभिः दुःखितः सन्, **न पुनर्न प्रत्याजायेयमिति;** पुनः जन्मान्तरं न गच्छेयमिति, **कामयेत;** तस्य प्रयोगं वक्ष्यामि इति शेषः ॥ १ ॥

तदुपासनसाधनमन्त्रमाह—

**रात्रिं प्रपद्ये पुनर्भूः मयोभूः कन्यां शिखण्डिनीं**
**पाशहस्तां युवतीं कुमारिणीमादित्यश्चक्षुषे वातः**
**प्राणाय सोमो गन्धाय आपः स्नेहाय मनो-**
**ऽनुज्ञाय पृथिव्यै शरीरम् इति (२)**

**रात्रिमिति।** **रात्रिं** तदभिमानिदेवतां शरणं प्रपन्नः अस्मि। उपवास इत्यर्थः। कीदृशीम्? **पुनर्भूः;** पुनः पुनः प्रतिदिनं भवित्री जायमाना। **मय** इति सुखनाम। सर्वेषां प्राणिनां सुखस्य भावयित्रीम्; **कन्यां;** कमनीयां ग्रहनक्षत्रादिभिः दीप्यमानां वा; "कन दीप्तिकान्तिगतिषु" इति धातुः। **शिखण्डिनीम्;** शिखण्डः, केशपाशः "प्रशंसायाम्" इति प्रशस्तकेशपाशः। **पाशहस्ताम्;** असुरबन्धनाय हस्तेन धृतपाशाम्। **युवतीम्;** नित्यतरुणीम्, बाल्यवार्धकाद्यवस्थारहितामित्यर्थः। **कुमारिणीम्;** कुत्सितं मारयन्तीति कुमाराः रक्षःप्रभृतयः तैः, तद्वतीम्। एवंगुणायाः रात्रेः प्रसादात् **आदित्यः;** चक्षुरिन्द्रियाभिमानी देवः, **चक्षुषे;** इन्द्रियाय उत्सुकस्य मम सम्यग् दर्शनाय। तादर्थ्ये चतुर्थी। तथा **वातः;** वायुदेवता, **प्राणः;** पञ्चवृत्त्यात्मकायां देहान्तर्वर्तने अनुग्राहको भवतु। अस्मच्छरीरं मा परित्याक्षीत् इत्यर्थः। **सोमः;** चन्द्रमाः, **गन्धाय;** देहस्य सौरभाय। **आपः;** अब्देवता स्नेहाय, देहस्य अरूक्षतायै शरीरस्निग्ध्याय। **मनः;** मदीयं मानसम्, रात्रेः अनुग्रहात् **अनुज्ञाय,** अनुज्ञानम् अनुज्ञः, घञर्थे कविधानम् इति भावे कप्रत्ययः। तस्मै भवतु, अनुक्षणं ज्ञानविशिष्टं भवतु इत्यर्थः। **पृथिव्यै शरीरम्;** विभक्त्योः व्यत्ययः। पृथिवी देवतां शरीराय तदाढ्याय भवतु। यद्वा—पृथिव्यै देव्यै शरीरं भवतु। तदधीनरक्षणं भवतु इत्यर्थः॥ २ ॥

एवमुपासितारं प्रसन्ना सती रात्रिः इत्थं ब्रूत इत्याह—

**सा हैनमुवाच अस्मिन् संवत्सरे मरिष्यसि**
**अस्मिन्नयनेऽस्मिन्नृतावस्मिन् मासेऽस्मिन्नर्धमासे-**

ऽस्मिन् द्वादशरात्रेऽस्मिन् षड्रात्रेऽस्मिंस्त्रिरात्रेऽस्मिन्
द्विरात्रेऽस्मिन्नहोरात्रेऽस्मिन्नहन्यस्यां रात्र्यामस्यां वेलाया-
मस्मिन् मुहूर्ते मरिष्यस्येहि स्वर्गं लोकं देवलोकं वा ब्रह्मलोकं
वा क्षत्रलोकं वा विरोचमानस्तिष्ठन् विरोचमानामेहि
योनिं प्रविशेति ॥ ३ ॥

**सेति । सा** खलु प्रसन्ना रात्रिः, **एनम्**; उपासकम् **उवाच** ब्रवीति । लटः छान्दसो लिट् किमिति ? '**अस्मिन् संवत्सरे**' इत्यारभ्य, '**अस्यां वेलायाम्**' इत्यन्तेन संवत्सरतदवयवभूतेषु अयनादि कालविशेषु च मरिष्यसीति मारणमुहूर्तं ब्रुवति अस्मिन् क्षणे त्वं मरिष्यासि । अतः **एहि** आगच्छ स्वर्गादीन् लोकान् यथाभिलाषं ब्राह्मणजात्या यागादिना लब्धव्यो लोकः । क्षत्रेण क्षत्रियजात्या प्रजापाल नादिभिः प्राप्यो लोकः । एषु अभिमतं लोकं गत्वा तत्र **विरोचमानः** दीप्यमानः चिरं तिष्ठ । अथवा– अस्मिन्नेव लोके विरोचमानां दीप्ताम् उत्कृष्टां ब्राह्मणादियोनिं प्रविश, तदर्थम् एहि अगच्छेति ॥ ३ ॥

एवं राज्योक्तमुपासको निराकुर्यादित्याह—

**नाहं योनिं प्रवेक्ष्यामि भूतोत्तमाया ब्रह्मणो**
**दुहितुः संरागवस्त्राया जायते म्रियते संधीयते चेति ॥ ४ ॥**

**नाहमिति । अहम्**; उपासकः । त्वदुक्तां प्रशस्तामपि **योनिं** न प्रवेक्ष्यामि । योने प्राशस्त्याभावमेवाह—**भूतेति । भूतोत्तमायाः**, भूतेषु श्रेष्ठायाः, **संरागवस्त्रायाः**; आर्तवेन रजसा संरक्त वस्त्रायाः **ब्रह्मणः**; ब्रह्माणजातेः, **दुहितुः**; स्त्रिया अपि **योनिं** न प्रवेक्ष्यामि ॥ ४ ॥

**कुतोऽप्रवेश इत्याह—**

**यत एको योनिं प्रविष्टः जायते जातः सन्**
**संम्रियते प्राणैः वियुज्यते मृतः संधीयते**
**देहान्तरेण संबध्यते अत इति ॥ ५ ॥**

**यत इति**; अतो हेतोरित्यर्थः ॥ ५ ॥

इति निराकृत्य परोक्षेण स्तुवन् स्वाहितापुनर्भवमाह—

**रात्रिस्तु मा पुनातु रात्रिः स्वमेतत् पुष्पान्तं**
**यत् पुराणमाकाशं तत्र मे स्थानं कुर्वन् अपुन-**
**र्भवाय अपुनर्जन्मने एतावदेव रात्रौ रात्रे व्रतं रात्रेर्व्रतं चेति ॥ ६ ॥**

**रात्रिस्त्वति ।** तुशब्दो वैलक्षण्यार्थः । अपि तु रात्रिः देवता मां **पुनातु** जन्मान्तरापादकात् कर्मणः शोधयितुं ; रात्रिरिति पुनरुक्तिः आदरार्था । अथ प्रत्यक्षोक्तिः—हे रात्रे ! **पुराणम् ;** पुरातनम् स्वर्गादि-लक्षणम् अर्चिरादिमार्गः, तं प्राप्यम् । **आकाशम् ;** आ समन्तात् काशमाप्रभं ब्रह्मलोकाख्यम् , **खमेतत् ;** खमाकाशम् , **पुष्पान्तम् ;** पुष्पं कर्म फलोपभोगस्थानम्, तस्य अन्ततः बहिर्भूतम्, तत्र तस्मिन् आकाशे ब्रह्मलोके मम स्थानं कुरु । किमर्थम् ? **अपुनर्भवाय ;** पुनर्भवपरिहाराय । अस्यैव विवरणम्—**अपुनर्जन्मन** इति । न मे ब्रह्मलोकनिवासिनः पुनरुत्पत्तिः । "न च पुनरावर्तते" इति श्रुतेः । **स्मृतेश्च**—

"ब्रह्मणा सह सर्वे ते संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति । पूर्वोक्तमन्त्रसाध्यप्रतिपादनव्यतिरेकेण रात्र्युपासनं जपान्तं प्रयोगान्तरेष्विव उपोषणादि-व्रतान्तरं च नास्तीत्याह—**रात्राविति ।** **रात्रौ;** विषयसप्तमी, रात्रिविषयम् । "रात्रिं प्रपद्ये" इत्यादिकर्म-साध्यं यत् प्रपदनमुक्तम् , एतदेव रात्रेः देवतायाः प्रसादनं प्रपदनं चैतदेव । यद्वा—**रात्राविति** अधिकरणसप्तमी । एतत् व्रतं रात्रावेव कर्तव्यम् ; न दिवेति ॥

**इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे सामविधानाख्ये तृतीयब्राह्मणे तृतीयाध्याये अष्टमः खण्डः**

---

# उदाहृतप्रमाणग्रन्थानामनुक्रमः (१)

## श्लोकानुक्रमणिका (२)



---

# उदाहृतप्रमाणवाक्यानुक्रमः (३)

* अयं श्लोकः चतुर्थाध्यायारम्भे चतुर्धरीशान्तनव्योरेव दृश्यते ।

पद्भ्यां विनिर्ययौ द्रष्टुम् २१, भाग. १०-५३-८
पश्यतां दुष्ट मय्येव ३, देवी. १०५
पश्य सुश्रोणि संप्राप्तं १८, २-११९-२०१
परस्यान्ते कृतात्मानः २७, कूर्म. १२-१७३
पार्वत्या परितोषेण १२, हरि. २-१०६ ५६
पुनश्चाप्यतिरौद्रेण १०, लक्ष्मी. ९-३०
प्रत्यक्षफलदानं च ५, वायु.
प्रत्यापत्तिमपश्यन्ती २०, भाग. १०-५३-२१
प्रबोधं च जगत्स्वामी २ देवी. १-८६
प्रवासे राजबन्धे च १७ हरि. १-३-१६
प्राणात्ययेषु सर्वेषु १७, हरि. १-३-२६
प्रातश्चैवापराह्णे च १७, विष्णु. ५-१-८४
प्रीयतां मे जगन्नाथ १९, हरि. २-१२०-४३
बलावलेपाद् दुष्टे त्वं ३, देवी. १०-१३
बोधं च क्रियतामस्य २ देवी १-८७
ब्रह्मणा च कृता याश्च ६, देवी. १२-२५
ब्रह्मणा सह सर्वे ते २७, कूर्म. १२-१७३
ब्रह्मा विष्णुश्च शक्रश्च १६, हरि. २-१२०-२७
ब्रह्मेशगुहविष्णूनां ३, देवी. ८-१३
भक्तिप्रिये जगन्नाथे २० हरि. २-१२०-४६
भक्तिश्रद्धावता नित्यं ११, लक्ष्मी. ९-५१
भक्षयन्त्याश्च तानुग्रान् १०, लक्ष्मी. ९-३१
भद्रकालीं समानर्चुः २२, भाग. १०-२२-५
भद्रेति भद्रकालीति १७, विष्णु. ५-१-८३
भरिष्यामि शुभैः शाकैः १०, लक्ष्मी. ९-३६
भर्तृभोगैकशेषा हि ५, वायु.
भवानीं वन्दयांचक्रुः २१, भाग. १०-५३-४४
भविष्यन् महिषाख्यस्य १५, वरा. २८-४३
भावश्च क्रियतामद्य २०, देवी. १-८७
भीमे देवि प्रसीदेति १०, लक्ष्मी. ९-४१
भीष्मकन्या वरारोहा २०, भाग. १०-५३-२
भूयसीव तत्र प्रीतिः ५, वायु.
भूयात् पतिर्मे भगवान् २१, भाग. १०-५३-४
भ्रामरीति च मां लोके ११, लक्ष्मी. ४३
मत्पाणिग्रहणे नूनं २०, भाग. १०-५३-२३
मदीयाः शक्तयो यास्ताः ९, लक्ष्मी. ९-२२
मदीयाः शक्तिलेशा ये ८, लक्ष्मी. ९-९
मधुकैटभनाशे हि ८, लक्ष्मी. ९-१६
मनसा भावशुद्धेन १९, हरि. २-१२०-६
मनुजानां मुनीनां च १०, लक्ष्मी. ९-४२
मम प्रभावात् सौभाग्यं ११, लक्ष्मी. ९-५४
मयानुमोदितः सोऽसौ २२, भाग. १०-२२-२
मरुता सह पर्जन्यः १६, हरि. २-१२०-२८
महाकालीतनुं विद्धि ८, लक्ष्मी. ९-१५
महालक्ष्मीरहं शक्र ८, लक्ष्मी. ९-८
महालक्ष्मीरिति ख्याता १२, शिव
महालक्ष्मीर्महाभागा ११, लक्ष्मी. ९-४६
महिषान्तकरीसूक्तं ८, लक्ष्मी. ९-१२
महेन्द्रविष्णुभगिनीं १९, हरि. २-१२०-७६
मा वृथैवाभिजायेत ४, वायु.
मुनिभिः संस्मृता भूमौ १०, लक्ष्मी. ९-३४
मृत्युकालाभिभूतानां २, हरि २-५०-३१
य इदं शृणुयात् सर्वं १४, वरा. ९६-६१
यत एको योनिं प्रविष्टः २६, रात्रि. ५
यदुद्दिश्य व्रतमिमं २२, भाग. १०-२२-३०
यश्चाराधयते तास्तु १६, वरा. ९६-७२
यश्चैतत् पूजयेद् भक्त्या १४, वरा. ९६-६३
यश्चैनं शृणुयाद् भक्त्या १४, वरा. ९६-६२

* अयं श्लोकः चतुर्थाध्यायारम्भे चतुर्थरीत्यानभ्योत ...

# प्रधानपदानुक्रमः (३)

---

## शोधनम्

पृ. ४-१२-अजातपुंस्पर्शा.

,, ७-५-प्रथममध्यम.

,, १७-१०-सर्वजगत्सवित्री

,, २३-१०-"रात्रिं प्रपद्ये ;" इत्यस्य श्लोकस्य व्याख्यानप्रारम्भे, "तद्रायत्र्यर्थस्य कन्याम्" इत्युपलब्धेषु कोशेषु पाठो दृश्यते, अयं पाठः प्रामादिक इति प्रतिभाति। अत्र, "तद् रात्र्यर्थस्य कन्याम्" इति पाठः समीचीन इत्यभ्यूह्यते।

,, २३-२१-भूतोत्तमायाः.

,, २४-३-कर्मफलोपभोग.